*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942



**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन** – कनक शशि **सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टेंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग मेंप्रकाशित तथा बंगाल ऑफ़सेट वर्क्स, जी-181, सैक्टर-63, नोएडा 201 301 द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-791-7

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# मिल्याः द्विचक्रिका



मिल्याः माता



तोसिया



मिली







एकस्मिन् दिने मिली क्रीडति स्म।
सा द्विचक्रिकां चालयतः कांश्चन बालान् अपश्यत्।
मिली अपि द्विचक्रिकां चालयितुम् ऐच्छत्।
मिली पितरौ द्विचक्रिकाम् अयाचत्।




अग्रीमे दिवसे पिता मिल्याः कृते एकां द्विचक्रिकाम् आनीतवान्।
द्विचक्रिका नूतना न आसीत् किन्तु सम्यक् आसीत्।
मिली तां दृष्ट्वा अति–प्रसन्ना अभवत्।
रक्तवर्ण–द्विचक्रिकायां नीलासनम् आसीत्।



मिली मातरं द्विचक्रिका–चालनस्य शिक्षणाय उक्तवती।
माता मिलीं द्विचक्रिकायाः चालनं शिक्षितवती।
ते शीघ्रं प्रातः उत्थाय उन्मुक्तं क्षेत्रम् अगच्छताम्।
मिली द्विचक्रिकायाः चालन–शिक्षणं प्रारब्धवती।



माता मिलीं द्विचक्रिकायाः आसने उपावेशितवती।
मिली द्विचक्रिकायाः वारङ्गम् उभयतः धृतवती।
मिली शनैः शनैः पादचालनीं चालितवती।
माता द्विचक्रिकायाः वारङ्गम् आसनं च धृतवती।



अचिरम् एव माता द्विचक्रिकां त्यक्तवती।
मिली द्विचक्रिकाया: भारं सोढुं समर्था न जाता।
सा द्विचक्रिकात: अपतत्।
तस्य हस्ते अल्प: क्षत: अभवत्।





मिली किञ्चित्कालं रोदितवती ततः च द्विचक्रिकां चालयितुम् आरब्धवती।

मिली पुनः द्विचक्रिकायाम् उपाविशत्।

माता द्विचक्रिकां सन्धारितवती।

मिली शनैः शनैः द्विचक्रिकां चालयति स्म।



अग्रिमे दिवसे उभे प्रातः क्षेत्रं पुनः प्राप्तवत्यौ।
अद्य माता पृष्ठतः द्विचक्रिकां धृतवती।
मिल्याः द्विचक्रिका परितः कम्पते स्म।
एवमेव मिली चिरं द्विचक्रिकां चालयति स्म।



तस्मिन् दिने मिली सायम् अपि द्विचक्रिका–चालनं शिक्षितवती।
मिली एकाकिनी एव द्विचक्रिकां हस्ताभ्याम् आकर्षति स्म।
सा द्विचक्रिकाम् आरोढुं बहु चेष्टितवती।
मिली स्वयं द्विचक्रिकाम् आरोढुं समर्था न जाता।





अग्रिमे दिवसे प्रातः मिल्याः द्विचक्रिका न प्रकम्पिता।
सा मातुः साहाय्येन द्विचक्रिकाम् आरूढा।
माता द्विचक्रिकाम् अनु चलति स्म।
मिली शनैः शनैः द्विचक्रिकां चालयति स्म।





किञ्चित्कालानन्तरं मिली द्विचक्रिकां वेगेन चालितवती।
माता ताम् अनु धावितवती।
अल्पकालानन्तरं माता द्विचक्रिकां त्यक्तवती।
किञ्चित् दूरं गत्वा मिली द्विचक्रिकायाः अपतत्।





मिली द्विचक्रिका–चालने समर्था अभवत्।
मिली स्वयं द्विचक्रिकाम् आरोढुं समर्था न आसीत्।
मिली स्वयं द्विचक्रिकात: अवतरितुम् अपि समर्था न आसीत्।
मिल्या द्विचक्रिकाया: आरोह: अवरोहश्च शिक्षणीयौ आस्ताम्।



मिली आदिनं द्विचक्रिका-विषये चिन्तयति स्म।
तस्याः हस्तौ वारङ्गः इव चलतः स्म।
सा रात्रौ अपि स्वप्ने द्विचक्रिकां चालयति स्म।
प्रातःकालात् एव द्विचक्रिकाम् आदाय निर्गच्छति स्म।





मिली द्विचक्रिकाम् ऋजुतया चालयति स्म।
सा द्विचक्रिकायाः आरोहे अवरोहे च कष्टम् अनुभवति स्म।
सा द्विचक्रिकायाः अवरोह–काले पतति स्म।
मिल्याः कृते द्वियक्रिका उन्नता आसीत्।





द्विचक्रिकाम् आरुह्य मिल्याः पादौ भूमिं न स्पृशतः स्म।
मिली बहुवारं पतिता आसीत्।
तथापि सा अत्यन्तं प्रसन्ना भवति स्म।
सा तोसियाम् अपि एतत् उक्तवती।




तोसिया ताम् एकं विशालं प्रस्तरं दर्शितवती।
मिली प्रस्तरे पादं निधाय द्विचक्रिकाम् आरूढा।
इदानीं मिली हृष्टा अभवत्।
उभे द्विचक्रिकया विद्यालयम् अपि गन्तुम् आरभेताम्।

# तोसिया-मिल्योः अपराः कथाः



















